॥ श्रीः ॥

लक्ष्मीधरकविविरचितः

# अद्वैतमकरन्दः ।

स्वयंप्रकाशयतिविरचितया

रसाभिव्यंजिकाख्यया व्याख्यया समेतः ।

स च विद्वत्साहाय्येन संशोध्य

वेणुग्रामे

आबाजी रामचन्द्र सावन्त इत्यनेन

स्वीये ‘ श्रीरामतत्त्वप्रकाश ’ मुद्रणालये

मुद्रयित्वा प्राकाश्यं नीतः ।

शकाब्दा १८१८.

मूल्यं ४ आणकाः ।

# उपोद्घातः

पुराकिल कैश्चित्परमकारुणिकै र्लक्ष्मीधराख्यैः श्रीमदाचार्यैः संसारतापतप्तानां नसपुनरावर्तत इतिश्रुतिप्रतिपादितनिरवद्यपदकांक्षावतां तत्तदिष्टसिद्धेस्तत्त्वानुसंधानान्यथाऽनुपपत्तिं मनस्यभिसंधाय अनायासेन तदुपलब्धये उपनिषत्सारसंग्रहरूपाऽद्वैतमकरंदाख्योऽल्पतरग्रंथो निरमायि। यद्यपि उपनिषत्प्रतिपादितसर्वविषयप्रतिपादकाः श्रीमच्छंकराचार्यवाचस्पतिविवरणविद्यारण्यप्रभृतिमहानिबंधकारैः सर्वतः समग्रतया प्रतिपादितविषयस्वरूपा अनेके महानिबन्धास्संति । तत एवेष्टसिद्धिर्भवेत् तथापि तादृश ग्रन्थोहापोहप्रज्ञाविहीनानां तत्र प्रवेशेच्छावतां तत्प्रवेश संपादनद्वारा अधिकारिणां स्वातंत्र्येणवा तत्त्वज्ञानमुत्पाद्य कृतार्थतां आपादयतीति । तेषामसौ प्रयासः सफलः । अमुमेवार्थं मनसि निधाय स्वयंप्रकाशयतिभिस्तदुपरि व्याख्या कृता । एतादृशाऽपूर्व ग्रन्थोऽद्यावधि कैरपि न मुद्रितः । तन्मुद्रणोत्सुकैरस्माभिरनेकानि पुस्तकानि संपाद्य विद्वद्भिः परिशोद्ध्यच मुद्रयित्वा प्रकाशितः । अनेन सर्वेषामिष्टं भव त्वित्याशास्महे ।

विद्वत्कृपाभिलाषी

प्रकाशकः

॥ ॐ तत्सद्ब्रह्म ॥

# अद्वैतमकरंदः प्रारभ्यते ।



॥ श्रीगणेशाय नमः ॥ श्रीरघुनाथानंदमूर्तिगुरुभ्यो नमः ॥ नित्यं निरंतरानंदं चिद्घनं ब्रह्म निर्भयं ॥ श्रुत्या तर्कानुभूतिभ्यामहमस्म्यद्वयं सदा ॥ १ ॥ अंबागृहीतवामार्द्धं वंदे चंद्रकलाधरं ॥ लावण्यमधुराकारं कारुण्यरसवारिधिम् ॥ २ ॥ कैवल्यानंदयोगींद्रपादकंजरजोरविः ॥ राजते मे हृदाकाशे मोहध्वांतनिवर्तकः ॥ ३ ॥ शुद्धानंदपदांभोजद्वंद्वं सेवे यदुद्भवं ॥ निर्वाणरसमास्वाद्य हृष्टाः शिष्यालिपंक्तयः ॥ ४ ॥ सच्चिदानंदयोगींद्रा जयंति भुवि केचन ॥ यत्कृपालवतस्तीर्णो मया संसारवारिधिः ॥ ५ ॥ इह खलु लक्ष्मीधरो नाम कश्चित्कवींद्रो निरंतरनित्याद्यनुष्ठानशुद्धस्वांततया संजातविवेकवैराग्यशमादिमुमुक्षावतः आत्मविविदिषया संत्यक्तलोकवेदधर्मान् गुरुवरचरणोपसर्पणपुरःसरं विधितः सम्य-

कृश्रुतवेदांततत्वेऽप्यसंभावनया प्रतिबद्धज्ञानतया ऽपरितुष्यतः कांश्चित्पुरुषधौरेयानुपलभ्य संजातकरुणस्तेषां करतलबिल्वफलवत्स्फुटं वेदांतप्रतिपाद्यं ब्रह्म सच्चिदानंदलक्षणं सर्वज्ञं सर्वोपादानं नित्यं सर्वगमद्वयं देहेंद्रियप्राणमनोबुध्यहंकारसाक्षिप्रत्यगभिन्नतया तर्कैः संभावयितुं किंचित्प्रकरणमद्वैतमकरंदाख्यमारभमाणश्चिकीर्षितस्याऽविघ्नेन परिसमाप्तये स्वेष्टदेवताप्रणामरूपं मंगलं स्वयमनुष्ठाय शिष्यशिक्षायै ग्रंथतो निबध्नाति ॥

कटाक्षकिरणाचांतनमन्मोहाब्धये नमः ॥ अनंतानंदकृष्णाय जगन्मंगलमूर्तये ॥ १ ॥

कटाक्षकिरणाचांत इति। कटाक्षं भक्तेषु तिर्यङ् निपतिता कृपादृष्टिस्तस्याः किरणेन प्रभया आचांतः शोषितो नमतां नमस्कर्तॄणां मोहो ऽज्ञानं स एवाऽब्धिः समुद्रो येन स तथा तस्मै। श्रुतिगुरुपरमेश्वरप्रसादरहितानां दुस्तरत्वाद्भ्रांतिपरंपरातरंगयुक्तत्वाद्रागादिमहाग्राहादियोगाच्च युक्तमज्ञानस्य समुद्रत्वं। अनंतानंदकृष्णाय। अनंतो देशकालवस्तुपरिछेदशून्यः आनंदः स्वरूपं यस्य सः अनंतानंदः स चाऽ सौकृष्णश्चाऽनंतानंदकृष्णो वसुदेव-

कुमारस्तस्मै । जगन्मंगलमूर्तये जगतां लोकानां मंगलभूता सुखाभिवृद्धिकरी मूर्तिर्विग्रहो यस्य सः जगन्मंगलमूर्तिस्तस्मै नमोऽस्तु ॥ अथवा कटाक्षमंतिमाक्षमंतःकरणमित्यर्थः । तस्य किरणं वाक्यजन्यतद्वृत्तिप्रतिफलितं चैतन्यं तेनाऽऽचांतो भक्षितो नमतां स्वात्मप्रवणानामंतर्मुखानां श्रवणादिपराणां मोह आत्माज्ञानमेवाब्धिः असंख्याताध्यासपरंपराकल्लोलोदयहेतुत्वा दनेकानर्थदुष्टग्राहादियोगाच्च स भक्षितो येनेति तस्मै । अथ वा कटाक्षमंतिमं प्रमाणं वाक्यजन्यवृत्तिरेव तदनंतरं सर्वबाधेन प्रमाणादिव्यवहाराप्रवृत्तेः । यत्रत्वस्येत्यादिश्रुतेः । अन्यत्पूर्ववत् । यद्वा कटवत्सर्वतः प्रसृतं अक्षमपरोक्षं स्वरूपचैतन्यमेव । दिवीवचक्षुराततं । यत्साक्षादपरोक्षादित्यादिश्रुतेः । तस्यकिरणेनेति शेषं पूर्ववत् । अत्र च । कृषिर्भूवाचकः शब्दो णश्च निर्वृत्तिवाचक इति कृष्णशब्दार्थो द्रष्टव्यः । जगतां मंगला सुखकरी मूर्तिर्यस्य । एतस्यैवाऽऽनंदस्याऽन्यानि भूतानि मात्रामुपजीवंति । एष एवाऽऽनंदयतीत्यादिश्रुतेः । जगन्मंगलमूर्तय इत्यनेन स्मृतिमात्रेण तस्यैहिकामुष्मिकपुरुषार्थपरिपंथिविघ्ननिरासामर्थ्यमुक्तं । मंगलस्य तादृशत्वात् । एवमनुष्ठितस्वेष्टदेवतानमस्कारलक्षणमंगलनिबर्हितसकला-

वराय: प्रथमं तत्वमस्यादिवाक्यैस्तात्पर्ययुक्तैर्बोधितं प्रत्यगात्मनो ब्रह्मत्वं युक्त्या संभावयन्नाह ॥ १ ॥

अहमस्मि सदा भामि कदाचिन्नाऽहमप्रियः ॥ ब्रह्मैवाऽहमतः सिद्धं सच्चिदानंदलक्षणम् ॥ २ ॥

अहमस्मीति । अहं अहंकारादिसाक्ष्यस्मि सद्रूपो भवाम्यात्मन्यध्यस्ताहंकारादेः सत्ताप्रदत्वात् । सदाऽवस्थात्रयेऽपि भामि जाग्रति देहेंद्रियादिसाक्षितया स्वप्नेंऽतःकरणवासनाप्रपंचसाक्षितया सुषुप्तावज्ञानसाक्षितया च प्रकाशे कदाचित्कदाचिदपि दुःखाद्यनुभवकालेऽपि अहमप्रियो न भवामि किंतु सदा प्रिय एव भवामि। दुःखादौ द्वेषस्याऽऽत्मस्नेहनिमित्तत्वाच्छत्रुदुःखादौ द्वेषस्याऽदर्शनात् । तथा च यस्मात्कालत्रयेऽप्यबाध्यमानत्वात् सद्रूपः । प्रकाशमानत्वात् चिद्रूपः । परमप्रीतिविषयत्वादानंदरूपश्च । तस्मादहं सच्चिदानंदलक्षणं सच्चिदानंदरूपं ब्रह्मेतिसिद्धं । अत्रेदमनुमानं विवक्षितं । प्रत्यगात्मा ब्रह्मणो न भिद्यते सच्चिदानंदरूपत्वात् । ब्रह्मवदिति । नच हेतुरसिद्धः । अहमस्मीत्यादिना तस्य साधितत्वात् । ननु अनुमानस्य नाऽहमीश्वर इति प्रत्यक्षविरोध इति चेन्न । तावदात्मनोऽब्रह्मत्वे

बाह्यप्रत्यक्षविरोधः आत्मनि रूपाद्यभावे न बाह्यस्य तत्राऽप्रवृत्तेः। नाऽपि मानसप्रत्यक्षविरोधः। मनसो मनःसाक्षिण्यात्मनि प्रवृत्तेरसंभवात्। ननु जीवेश्वरौ भिन्नौ किंचिज्ज्ञत्वसर्वज्ञत्वविरुद्धधर्माधारत्वाद्दहनतुहिनवदित्यनुमानविरोध इति चेन्न। विरुद्धधर्मवतोर्बिंबप्रतिबिंबयोरुच्चमंदशब्दाधार आकाशे च व्यभिचारात्। ननु द्वासुपर्णेत्यादिश्रुतिविरोध इति चेन्न। तस्या अतत्परत्वेन तत्त्वमस्यादिश्रुत्या बाध्यमानत्वात्तस्मान्नाऽहमीश्वर इतिबुद्धिर्देहाद्युपाधिनिमित्ता भ्रांतिः नतु शुद्धजीवस्वरूपविषया। तदुक्तं। 'त्वयि मयि च गण्यमाने मशकान्मशकोऽहमेव देहदृशा। विश्वाधिके शते मे सद्बोधानंदपूर्णता तुल्या' इति ततोऽहं ब्रह्मैवेति भावः॥ २॥

ननु यः सर्वज्ञः ससर्वविदित्यादिश्रुत्या हि ब्रह्म सर्वज्ञतयाऽवगम्यते यतोवेत्यादिश्रुत्या च सर्वजगत्कारणतया च। प्रत्यगात्मा तु स्वशरीरादिकमपि साकल्येन न जानाति। स्वातंत्र्येण किंचित्कर्तुमपि न शक्नोति। तत्कथमस्य सर्वज्ञेनसर्वकारणेन च ब्रह्मणाऽभेदः इत्याशंक्य प्रत्यगात्मनोऽपि तद्द्वयमुपपादयति।

**मय्येवोदेति चिद्व्योम्नि जगद्गंधर्व-**
**पत्तनं ॥ अतोऽहं न कथं ब्रह्म**

सर्वज्ञं सर्वकारणं ॥ ३ ॥

मय्येवेति । चिद्व्योम्नि चिदाकाशे मयि प्रत्यगात्मन्येव जगद्गंधर्वपत्तनं जगदेवगंधर्वपत्तनमैंद्रजालिकं विक्षुब्धमायया मरणावस्थायां च मेघेषु प्रतीयमानं नगरं गंधर्वपत्तनं नाम तादृशमिदं जगदुदेति उत्पद्यत इत्यर्थः । अयं भावः । मिथ्यापदार्थस्य हि द्रष्टैवोपादानं । यथा स्वप्नप्रपंचस्य तत्साक्षितया च जाग्रत्प्रपंचस्याऽपि सर्वस्य दृश्यत्वेन मिथ्यात्वात् । तद्द्रष्टा प्रत्यगात्मैवोपादानं वक्तव्यं । तदुक्तं “यथा स्वप्नप्रपंचोऽयं मयि मायाविजृंभितः । एवं जाग्रत्प्रपंचोऽपि मयि मायाविजृंभित” इति । एवंच प्रत्यगात्मनस्तद्द्रष्टृत्वलक्षणं सर्वज्ञत्वं तदधिष्ठानलक्षणं सर्वकारणत्वं च सिध्यति । ननु बहुदूरव्यवहितदेशवर्तिमेघादीनामदृश्यमानानां कथं प्रत्यगात्मा द्रष्टा । कथं वा तदुपादानमिति चेच्छृणु तर्हि रहस्यं । एतावंतं कालं मेर्वादिकमहं नाऽज्ञासिषमिति ह्यज्ञानविशेषणतया मेर्वादिकं स्मर्यते । तच्च स्मरणं मेर्वाद्यनुभवं विनाऽनुपपद्यमानं सन्मेर्वाद्यनुभवं कल्पयति । तत्र चेंद्रियादीनामप्रवृत्तेः । प्रत्यगात्मचैतन्येऽध्यस्ततयैव मेर्वाद्यनुभवो वक्तव्यः । अध्यस्तस्य चाऽधिष्ठानमेवोपादानं तज्ज्ञानादेव भानं च भवति । तथा च प्रत्यगात्मा स्वाध्यस्तमेर्वादेरप्य-

ज्ञातसाक्षी तदुपादानं च भवति । तदुक्तं ब्रह्मगीतायां । "ज्ञातरूपेणचाऽज्ञातस्वरूपेण च साक्षिणः । सर्वं भाति तदा भाति ततस्तद्व्यापि सर्वदा" । तथा च प्रत्यगात्मा सर्वज्ञः सर्वकारणं चेति यत उक्तप्रकारेण सर्वज्ञः सर्वकारणं चाऽहमतः कथं तद्रूपं ब्रह्म न भवामि भवाम्येवेत्यर्थः ॥ ३ ॥

ननु नित्यं विभु सर्वगतं सुसूक्ष्ममित्याद्युपनिषत्सु नित्यं ब्रह्म श्रूयते । आत्मा च मरणादिधर्मकत्वादनित्य एवाऽनुभूयते । ततश्च न तयोरैक्यमित्याशंक्य किमात्मनो बौद्धपक्ष इव स्वत एव नाशं ब्रवीषि उत दंडसंयोगाद्घटस्येवाऽन्यसंबंधादात्मनो नाशं ब्रवीषि अथवा पटनाशात्पटगतरूपादिवदाश्रयनाशान्नाशं ब्रवीषि इति विकल्प्याऽऽद्यं प्रत्याह ।

न स्वतः प्रत्यभिज्ञानान्निरंश-
त्वान्नचाऽन्यतः । न चाऽश्रयवि-
नाशान्मे विनाशः स्यादनाश्र-
यात् ॥ ४ ॥ ॥ ॥

न स्वत इति । प्रत्यगात्मनो मम न स्वतो नाशो भवति । तत्र हेतुः । प्रत्यभिज्ञानादात्मनः प्रत्यभिज्ञायमानत्वात् । प्रत्यभिज्ञानं नाम पूर्वमनुभूतस्य कालांतरे प्रमाणेन तदुल्लेखपूर्वकं ज्ञानं । आत्मा हि यो-

ऽहं बाल्ये पितरावन्वभूवं स एवेदानीं स्थाविरे प्र-
णेप्तॄननुभवामि योऽहं सुप्तः स्वप्नमद्राक्षं स एवेदा-
नीं जागर्मीति च बाल्याद्यवस्थासु जाग्रदाद्यवस्था-
सु च प्रत्यभिज्ञायते तच्च प्रत्यभिज्ञानमात्मनो नि-
र्णिमित्तनाशेनोपपद्यते । तथा हि । आत्मनो हि
स्वतो नाशे प्रतिक्षणमन्योन्य आत्मेति वक्तव्यं ।
तत्र कथं वा अन्येनान्येन सोऽहमिति प्रत्यभिज्ञायेत ।
आत्मा च सोऽहमित्यात्मानं प्रत्यभिजानाति तस्मा-
न्न तस्य स्वतोनाश इत्यर्थः । न द्वितीय इत्याह ।
निरंशत्वान्न चाऽन्यत इति । निरंशत्वादंशरहित-
त्वान्निरवयवत्वादन्यतो हेतुसंयोगादप्यात्मनो न
नाश इत्यर्थः । आत्मा हि चिद्रूपत्वान्निरवयवः । य-
दि चिद्रूपस्याऽऽत्मनः सावयवत्वमुच्यते तर्हि व-
क्तव्यमात्मावयवाश्चेतना अचेतना वा । नाऽऽद्यः ।
आत्मावयवानां हि प्रत्येकं चेतनत्वे विरुद्धाभिप्राय-
तया शरीरमुन्मथ्येत । न द्वितीयः । अचेतनैरवय-
वैरारब्धस्याऽप्यात्मनोऽप्यचेतनत्वप्रसंगात् । नन्व-
चेतनैस्तंतुभिरारब्धपटश्चेतनो दृश्यते ततो निरवयव
एवाऽऽत्मा । न निरवयवात्मनि हेतुप्रसंगः संभवति त
स्यैकदेशवृत्तित्वादतोऽन्यतोऽप्यात्मनो न नाश इति
भावः । नाऽपि तृतीय इत्याह । न चाश्रयेत्या-
दिना । आश्रयविनाशादाधारविनाशादपि मे मम

विनाशो न स्यात् । आत्मा हि गुणक्रियाजात्याद्य-न्यतमत्वाभावादनाश्रयः । निरवयवत्वाच्च । नाऽपि-घटादिवत्साश्रयोऽतः आश्रयनाशादाधारविनाशा-दप्यात्मनो न नाशः । आत्मनो मरणादिप्रतीतिस्तु देहाद्युपाधिकृता । तदुक्तं सूत्रकृता । चराचरव्यपा-श्रयस्तद्व्यपदेशो भाक्तस्तद्भावभावित्वादिति । अ-स्यचाऽर्थो विद्यारण्यगुरुभिरधिकरणरत्नमालायां दर्शितः । "जीवस्य जन्ममरणे वपुषो वाऽऽत्मनो हि-ते । जातो मे पुत्र इत्युक्तेर्जातकर्मादिभिस्तथा" इति पूर्वपक्षे प्राप्ते सिद्धांतमाह । "मुख्ये ते वपुषो भाक्ते जीवस्यैते अपेक्ष्य हि । जातकर्म च लोकोक्तिर्जी-वापेतेति शास्त्रतः" इति । ततस्त्रिविधनाशाभावान्नित्य एवाऽऽत्मेति तस्य ब्रह्मणोऽभेदः सम्यग् घटत इति भावः ॥ ४ ॥ ॥ ॥ ॥ ॥

न शोषप्लोषविक्लेदभेदाश्छिन्नभसो मम ॥ सत्वैरप्यनिलाग्न्यंभःशस्त्रैः किमुत कल्पितैः ॥ ५ ॥ ॥

हेतुसंयोगादात्मनो न नाश इति द्वितीयपक्षं प्रपंच-यति । नशोषेति । चिन्नभसश्चिदाकाशस्य ममाऽऽ-त्मनः । अनिलेन वायुना न शोषः शोषणं पत्रफ-लादेरिव भवति । नाऽप्यग्निना प्लोषो दाहः पटादे

रिव भवति । नाऽप्यंभसा जलेन सस्यादेरिव क्लेदः क्लेदनं भवति । नाऽपि शस्त्रेणाऽऽयुधेनेक्षुदंडादेरिव छेदो द्वैधीभाव आत्मनो भवति । आकाशस्येवाऽऽत्मनो निरवयवत्वेन वाय्वादिभिः संबंधाभावादित्यर्थः । व्यावहारिकसत्यस्य भूताकाशस्याऽपि हि परमते निरवयवत्वेनाऽसंगत्वादाकाशतुल्यैः सत्वैरप्यनिलादिभिः शोषादयो न भवंति परमार्थसत्यात्मनि मायाकल्पितत्वेन मिथ्याभूतैर्वाय्वादिभिर्वस्तुतोऽद्वितीयस्याऽसंगस्याऽऽत्मनः शोषादयो न संभवंतीति किमु वक्तव्यमित्यर्थः । तदुक्तं भगवता । अच्छेद्योयमित्यादिना ॥ ५ ॥ ॥ ॥

ननु प्रत्यगात्मा परिछिन्नवाऽनुभूयते । अहमिहैवाऽस्मीति प्रतीतेः । ब्रह्म च सर्वगतं । नित्यं विभु इत्यादिश्रुतेरतो नाऽहं ब्रह्मेत्याशंक्य प्रत्यगात्मनः। सर्वगतत्वं युक्त्या संभावयन्नाह ।

अभारूपस्य विश्वस्य भानं भासन्निधेर्विना। कदाचिन्नाऽवकल्पेत भा चाऽहं तेन सर्वगः ॥ ६ ॥

अभारूपास्याऽचिद्रूपस्य जडस्येत्यर्थः । विश्वस्य जगतो भानं प्रकाशः भासन्निधेर्विना भासन्निधिं विना चैतन्यसंबंधं विनेत्यर्थः । कदाचित्कदाचि-

दपि नाऽवकल्पेत न संभवेत् । भा च चैतन्यरूपश्चा- ऽहं प्रत्यगात्मा तेन जडसर्वप्रपंचावभसकत्वेन प्र- त्यगात्मा सर्वगः सर्वगतो भवतीत्यर्थः । बहुयोज- नदूरवर्तिचंद्रसूर्यमंडलं ततोऽप्यातिदूरवर्तिध्रुवादिन- क्षत्राणि च प्रत्यगात्मनो भासंते तच्च भानं जडानां तेषां स्वतो न संभवाति स्वप्रकाशरूपात्मचैतन्यसं- बंधबलेनैव तद्वक्तव्यं । स्वतोऽप्रकाशस्य घटादेः स्व- प्रकाशदीपादिसंबंधबलेनैव प्रकाशदर्शनात् । यदि प्रत्यगात्मा अत्रैव तिष्ठेत्कथं ध्रुवादिना संबध्येत ततो ध्रुवादिभासकत्वात्प्रत्यगात्मा सर्वगतः । परिच्छिन्न- ताप्रतीतिश्चाऽऽत्मनोऽभिव्यंजकोपाधिपरिच्छेदाभ्रा- न्त्योपपद्यते तदुक्तं ब्रह्मगीतायां । "स्वयं भातुमशक्तं हि जडात्मकामिदं जगत् । चित्संबंधबलेनैव खलु भा- ति नचाऽन्यथा ॥ १ ॥ स्वाभिव्यंजकसंकोचात्सं- कोचप्रतिभाऽऽत्मनः । स्वस्वरूपेण चिद्रूपः सर्व- व्यापी सदा खलु ॥ २ ॥" इति ततो जीवात्मा ब्रह्मैवेति भावः ॥ ६ ॥

ननु जीवस्य ब्रह्माभेदोऽसंगतः ब्रह्मण एवासिद्धे- र्देशकालवस्तुपरिच्छेदशून्यं वस्तु हि ब्रह्मेत्युच्यते नच तत्संभवाति । कालाकाशादेर्द्वितीयस्य विद्यमानत्वेन वस्तुपरिच्छेदाभावस्याऽसिद्धेः । नचाऽऽकाशादेर्ब्र- ह्मण्यारोपितत्वेन मिथ्यात्वान्न तेन तस्य सद्वितिय-

त्वमिति वाच्यं । आकाशादेरध्यस्तत्वे मानाभावात् । नचाऽऽत्मन आकाशः संभूत इति श्रुतिस्तत्र मानमिति वाच्यं तत्राऽऽकाशादेर्ब्रह्मकार्यतामात्रप्रतीतेरित्याशंक्य ब्रह्मणोऽद्वितीयत्वासिद्धये आकाशादेरध्यस्तत्वं साधयति ।

नहि भानादृते सत्त्वं नर्ते भानं
चितोऽचितः॥ चित्संभेदोऽपिनाऽ-
ध्यासादृते तेनाऽहमद्वयः ॥७॥

नहीति । भानादृते प्रकाशं विना पदार्थस्य सत्त्वं सद्भावो नाऽस्ति । अप्रकाशमानशशविषाणादेः सत्त्वादर्शनादित्यर्थः । ततः किं तत्राऽऽह । नर्त इत्यादिना । अचितो जडस्य चितः ऋते चैतन्यसंबंधं विना भानं प्रकाशो नाऽस्ति स्वतोभानवत्त्वे जडत्वाभावप्रसंगादित्यर्थः।ततोऽपि ।किं तत्राऽऽह। चित्संभेदइत्यादिना। चित्संभेदोऽपि चैतन्यसंबंधोऽपि अध्यासादृते चित्यारोपितत्वं विना जडस्य न संभवतीत्यर्थः । अयं भावः । चिज्जडयोराध्यासिकसंबंधातिरिक्तं संबंधं वदन्वादी प्रष्टव्यः । किं तयोः संयोगसंबंध उत समवायः । अथ तादात्म्यमथवा विषयविषयीभाव इति । नाऽऽद्यः । चितः अद्रव्यत्वेन संयोगानुपपत्तेर्गुणाश्रयस्यैव द्रव्यत्वाच्चितो निर्गुणत्वात् । नाऽपि

समवायः। चिज्जडयोर्गुणगुण्यादिष्वन्यतमत्वाभावा त्। ननु चिज्जडयोः कार्यकारणत्वाभावात्तंतुपटयो-रिव समवायोऽस्त्विति चेन्न। तंतुपटयोः समवाये अवयवावयविताया एव प्रयोजकत्वेन कार्यकारण-भावस्याऽप्रयोजकत्वात्। अन्यथा तंतुपटयोरपि समवायप्रसंगात्। अवयवावयवितायाश्च दृग्दृश्ययो रभावात्। नाऽपि तादात्म्यं। परस्परविलक्षणयो स्तादात्म्यासंभवात्। नाऽपि विषयविषयीभावः। तस्याऽवयवावयवितादात्म्यमूलसंबंधपूर्वकत्वात्तद-संबंधस्य चोक्तत्वात् अन्यथा अतिप्रसंगात्। तदुक्तं सर्वज्ञात्ममुनिभिः।"न संकरो नाऽपि च संयुतिस्तयो र्न चाऽस्ति तद्वत्समवायसंभवः। अतो न चिच्चैत्यस-मन्वयं प्रति प्रतीयते काचन मूलसंगतिः"। इति तत-स्तयोराध्यासिक एव संबंध इति वाच्यं। तथाच ज-डपदार्थभानान्यथानुपपत्तिरेवाऽऽकाशादेरध्यस्तत्वे प्रमाणं तदपि तैरेवोक्तं। "ततो वियन्मुख्यमदो जग-ज्जडं चिदात्मनोऽस्यैव विवर्त इष्यतां। अनाद्यविद्या-पटसंवृतात्मनस्तवोपलभ्यत्वममुष्य कल्प्यते"इति। ते नाऽऽआकाशादेरध्यस्तत्वेनाऽहं प्रत्ययाभिन्नः परमा त्माऽद्वयोऽद्वितीय इत्यर्थः।ततश्च ब्रह्मणो वस्तुपरिच्छे-दाभावेन त्रिविधपरिच्छेदशून्यत्वं सिद्धमित्यर्थः।तदु-क्तं विद्यारण्यमुनिभिः पंचकोशविवेके। "देशका-

लाऽन्यवस्तूनां कल्पितत्वाच्च मायया। न देशादिकृतोऽन्तोऽस्ति ब्रह्मानंत्यं स्फुटं ततः ” इति ॥ ७ ॥

ननु स्थूलोऽहं कृशोऽहं काणोऽहं बधिरोऽहं मूकोऽहं बुभुक्षितोऽहं पिपासितोऽहं मंताऽहं निश्चितोऽहमिति देहादिरूपेणाऽनुभूयमानस्य प्रतीचः कथंचिदेकरसब्रह्मतेत्याशंक्य देहादीनामनात्मत्वं प्रत्येकं साधयति ॥ ॥ ॥ ॥

न देहो नेंद्रियं चाऽहं न प्राणो न मनो न धीः । ममतापरिरब्धत्वादाक्रीडत्वादिदं धियः ॥ ८ ॥

न देह इति । देहः सशिरस्कः पिंडः इंद्रियं द्विविधं ज्ञानसाधनं चक्षुरादि कर्मसाधनं पाण्यादि च प्राणः पंचवृत्तिः मनः संशयात्मकं बुद्धिर्निश्चयात्मिका अहंशब्दस्य देहादिभिः प्रत्येकं संबंधः । एते देहादयो बुद्धिपर्यंताः पंचाऽपि पदार्थाः अनात्मान इत्यर्थः । कुत इत्यत आह । ममतेत्यादिना । ममतापरिरब्धत्वादिदं धिय आक्रीडत्वाच्च ममतया ममेति बुद्ध्या परिरब्धत्वादालिंगितत्वाद्विषयीकृतत्वादिति यावत्। इदं धिय इदं बुद्धेराक्रीडत्वाल्लीलास्थानत्वादिदं बुद्धिविषयत्वाच्च घटादिवदिति । अत्रेदमनुमानं विवक्षितं। देहादयः प्रत्येकमनात्मानः इदं बुद्धि-

विषयत्वान्ममताबुद्धिविषयत्वाच्च घटादिवदिति देहः अनात्मा रूपादिमत्त्वाद् घटवत्। इंद्रियाणि अनात्मानः करणत्वात्कुठारवत् प्राणः अनात्मा वायुत्वाद्बाह्यवायुवत् देहोऽहमित्यादिप्रतीत्यभावाच्च। अनात्मत्वं पंचानां। कृशोऽहमित्यादिप्रतीतिस्तु रक्तस्फटिक इत्यादिप्रतीतिवदात्मनि देहादिधर्माध्यासादप्युपपद्यते। नाऽपितत्संघातस्याऽऽत्मत्वं अनात्मसमुदायस्तत्संघातोऽपि नाऽऽत्मा अनात्मत्वाद् गृहादिवदिति भावः ॥ ८ ॥ ॥ ॥ ॥

नन्वहंकारस्याऽऽत्मत्वमस्तु तस्य ममेदंबुद्धिविषयत्वाभावादित्याशंक्य सुषुप्त्यादावात्मनि विद्यमानेऽप्यहंकारस्याऽभावान्न तयोरैक्यमित्यभिप्रेत्य प्रकारांतरेण तयोर्भेदं साधयति ॥ ॥ ॥

साक्षी सर्वान्वितः प्रेयानहं नाऽहं
कदाचन ॥ परिणामपरिच्छेदप-
रितापरूपप्लुवात् ॥ ९ ॥ ॥

साक्षीति। साक्षी चिद्रूपोऽन्तःकरणपरिणामरागद्वेषादिद्रष्टा सर्वान्वितः सर्वत्र घटपटादिष्वान्वितः। घटः स्फुरतीति स्फुरणस्य सर्वत्रानुगत्वेनाऽनुभवात् प्रेयान् प्रियतमः आनंदरूपस्तस्यैव प्रेयस्त्वादनुभूयते ह्यात्मनः प्रियतमत्वं अहं सर्वदा भूयासं न कदाचिन्नाऽ

भूवामित्यात्मनि सर्वेषां प्रार्थनादर्शनादित्यर्थः । एवंभूतोऽहं प्रत्यगात्मा कदाचन कदाचिदपि नाऽहं नाऽहंकारो भवामीत्यर्थः । तत्र हेतुमाह । परिणामेत्यादिना। अहंकारस्य परिणामपरिच्छेदपरितापैः परिणामो रागद्वेषादिपरिणामः परिच्छेदः परिमितत्वं परितापो दुःखादिरेतैस्त्रिभिरुपप्लवः संबंधस्तस्मादित्यर्थः । द्रष्टृदृश्यभावेन सर्वगतत्वपरिच्छिन्नत्वाकारेणाऽऽनंदरूपित्वदुःखित्वाकारेण चाऽनुभूयमानत्वादहंकारात्मनोर्भेदः स्फुट इत्यर्थः । किमिति ताह तयोर्भेदः सर्वैर्नाऽनुभूयत इति चेदहंकारात्मनोस्तप्तायःपिंडवदविवेकेन दृढमेकतयाऽध्यासान्नानुभूयत इति गृहाणेत्यभिप्रायः ॥ ९ ॥

नन्वेवमपि संसारिण आत्मनः कथं नित्यमुक्तब्रह्मता । नच संसारोऽहंकारस्यैव नाऽऽत्मन इति वाच्यं । आत्माहंकारोभयसन्निधाने प्रतीयमानस्य संसारस्याऽहंकारैकसंबंधित्वे मानाभावादित्याशंक्याऽन्वयव्यतिरेकावेव तत्र मानमित्याह ॥

सुप्तेऽहमि न दृश्यंते दुःखदोषप्रवृत्तयः ॥ अतस्तस्यैव संसारो न मे संसर्तृसाक्षिणः ॥ १० ॥



सुप्तेहमीति । अहम्यहंकारे सुप्ते उपरते सति सुषु-

क्षिमूर्छादौ दुःखदोषप्रवृत्तयः दुःखं दोषा रागाद-यश्च तत्कार्यभूता प्रवृत्तिश्च दुःखदोषप्रवृत्तयस्ता न दृश्यंते यतस्ततस्तस्यैवाऽहंकारस्य संसारः संसर्तृ-साक्षिणः संसर्तुरहंकारस्य साक्षिणो मे मम प्रत्यगात्म-नो न संसार इत्यर्थः । अहंकारे सति जाग्रत्स्वप्नयोः संसारदर्शनात् । तदभावे च सुषुप्त्यादौ केवले आत्मनि संसारादर्शनात् । अहंकारसंबंध्येव संसा-रः आत्मन्यपि तदविवेकात्प्रतीयते । यथा दाहक-त्वमग्निसंबंध्येव सत्तदविवेकादयस्यपि प्रतीयते । यथा रक्तिमा जपाकुसुमसंबंध्येव सन्नविवेकात्स्फटि-केऽपि प्रतीयते तद्वदात्मन्यप्यहंकारोपाधिवशादेव संसारः प्रतीयते न स्वतः सुषुप्त्यादावदर्शनात् । तदुक्तं सर्वज्ञात्ममुनिभिः । “ कर्त्रादिसंनिधिबलेन तवाऽपि कर्तृभोक्तृप्रमातृवपुरापताति भ्रमेण । तद्बुद्धि-संश्रयमनात्मगतं प्रतीचि शुद्धेऽपि पश्यति तमःप-टलावृताक्षः ” इति । अत आत्मा नित्यमुक्तं ब्रह्मैवेत्यभिप्रायः ॥ १० ॥ ॥ ॥

ननु एवमप्यात्मनो जाग्रदाद्यवस्थावत्त्वं वक्तव्यं । अहंकारस्य सुषुप्तावभावेन सुषुप्त्यवस्थावत्त्वानुपप-त्तौ जाग्रत्स्वप्नावस्थाद्वयसंबंधित्वस्याऽप्यनुपपत्तेस्ता-सां तिसृणामप्येकाश्रयत्वानियमादित्याशंक्य अहं-कारस्य सुषुप्तौ संस्काररूपेण वर्तमानत्वात्तस्यैव

सुप्तिर्नाऽऽत्मनस्तस्य सुषुप्तिसाक्षित्वात्ततो जाग्रत्स्व-
भावप्यऽहंकारस्यैवेत्याभिप्रेत्याह ॥ ॥ ॥

सुप्तः सुप्तिं न जानाति नाऽसुप्ते
स्वप्नजागरौ ॥ जाग्रत्स्वप्नसुषुप्तीनां साक्ष्यतोऽहमतद्दशः ॥ ११ ॥

सुप्त इति । यः सुप्तः सुप्तिं न जानाति न वेत्ति सोऽहंकार एव सुप्तः सुषुप्त्यवस्थावान् न त्वात्मा कुतः सुषुप्तितत्कालीनाज्ञानसाक्षितया जागरूकत्वादित्यर्थः । ततश्चाऽसुप्ते सुषुप्त्यवस्थारहिते प्रत्यगात्मनि स्वप्नजागरौ न भवतः । तयोः सुषुप्त्यवस्थासमानाश्रयत्वादित्यर्थः । हेत्वंतरमप्याह । जाग्रदित्यादिना । यतो जाग्रत्स्वप्नसुषुप्तीनां साक्षी द्रष्टा अतोऽहमात्माऽतद्दशः । ताः जाग्रदाद्याः दशा अवस्था यस्य स तद्दशः तद्दशो न भवतीत्यतद्दशः जाग्रदाद्यवस्थारहित इत्यर्थः । अत्रेदमनुमानं विवक्षितं । आत्मा जाग्रदाद्यवस्थावान्न भवति जाग्रदाद्यवस्थासाक्षित्वात् । यो यत्साक्षी न स तद्धर्मवान् । यथा घटसाक्षी न घटधर्मवानिति । तदुक्तमन्वर्थ नाम सर्वज्ञात्ममुनिभिः।"तिस्रोऽपि चिद्घनतनोस्तव दृश्यभूता दूरे च का सति मतेर्बहिरेव तावत् । आविस्तिरोभवनधर्मतया ह्यवस्थाः कः संकरो विमलचिद्वपु-

षस्तवाऽऽभिः" इति। जाग्रदाद्यवस्थालक्षणपर्यालोचनयाऽपि नाऽऽत्मनोऽवस्थासंबंध इत्याह ॥ ११॥

विज्ञानविरतिः सुप्तिस्तज्जन्म स्वप्नजागरौ ॥ तत्साक्षिणः कथं मे स्युर्नित्यज्ञानस्य ते त्रयः ॥ १२ ॥

विज्ञानेति। विज्ञानविरतिः विज्ञानस्य विशेषज्ञानस्य विरतिरुपरतिः सुप्तिरित्युच्यते। तज्जन्म तस्य विशेषविज्ञानस्य जन्म उत्पत्तिः। स्वप्नजागरावित्युच्येते। तत्रापि वासनामयप्रपंचविज्ञानं स्वप्नः। स्थूलप्रपंचविज्ञानं जाग्रदिति भाग इत्यर्थः। ततः किं तत्राऽऽह। तत्साक्षिण इत्यादिना। नित्यज्ञानस्याऽलुप्तचिद्रूपस्य तत्साक्षिण उक्तलक्षणसुषुप्त्यादिसाक्षिणो मे ममाऽऽत्मनस्ते त्रयः सुषुप्तिस्वप्नजागराः कथं स्युर्न कथंचिदित्यर्थः। अयं भावः। सुषुप्त्यवस्थायां तावत्सुषुप्तितत्कालीनाज्ञानावभासकं किंचिच्चैतन्यमंगीकार्यं सर्वैरपि अन्यथा उत्थितस्य पुरुषस्य सुखमहमस्वाप्स्यम् न किंचिदवेदिषमिति सुषुप्तितत्कालीनाज्ञानपरामर्शानुपपत्ते स्तच्चैतन्यं जडजन्यं मनश्चक्षुरादेः सुप्त्यंतःपातित्वादनंतं च तदजन्यभावस्य नित्यत्वनियमा तच्चैतन्यमस्माभिरात्मतेत्युच्यते। स वा एष महानज आत्मेति श्रुतेः।

तथाच कथमनादिनित्यज्ञानस्वरूपस्याऽऽत्मनो ज्ञानोपरमरूपा सुषुप्तिः ज्ञानोत्पत्तिरूपौ च स्वप्नजागरा स्युः । अहंकारस्य तु जन्यवृत्तिरूपज्ञानाश्रयत्वात् । तत्रयमुपपद्यते ततश्चाऽऽत्मा जाग्रदाद्यवस्थारहित इति ॥ १२ ॥ ॥ ॥

इदानीमात्मनो निर्विकारब्रह्माभेदाय षड्भावविकाराराहित्यं साधयति ॥ ॥ ॥ ॥

षड्विकारवतां वेत्ता निर्विकारोऽ
हमन्यथा ॥ तद्विकारानुसंधानं
सर्वथा नाऽवकल्पते ॥ १३ ॥

षड्विकारेति । षड्विकारवतां षट् च भावविकाराश्च षड्भावविकाराः । जायते । अस्ति । वर्धते । विपरिणमते । अपक्षीयते । विनश्यति । इत्युक्तास्ते येषां संति ते षड्भावविकारवंतस्तेषां बाह्ये घटादीनां अंतरे बुद्ध्यादीनां च वेत्ता ज्ञाताऽतोऽहमात्मा निर्विकारो विकाररहितो भवामि । आत्मा हि बाह्यांतरवस्तूनामुत्पत्त्यादिविकारान् जानात्यतो निर्विकारो भवितुमर्हति यो य ज्जानाति न स तद्धर्मवानिति व्याप्तेर्लोकसिद्धत्वादित्यर्थः । तदुक्तं वार्तिककृता । " नत्वं स्याद्विक्रियां दुःखी साक्षिता का विकारिणः । धीविक्रियासहस्राणां साक्ष्यतोऽ

ह्मविक्रियः" इति । विपक्षे दोषमाह ॥ अन्यथेत्यादिना । अन्यथा विकारसाक्षिणोऽपि विकारित्वे तद्विकारानुसंधानं तेषां विकारिवस्तूनां ये विकारास्तेषामनुसंधानं सर्वथा सर्वप्रकारेणाऽपि नाऽवकल्पते न संभवतीत्यर्थः ॥ अयमभिसंधिः । आत्मनोऽपि विकारित्वे किमात्मन इतरेषां च विकारा आत्मना ज्ञायंते उतेतरैर्नोभयथाऽपि विकारिवस्तुनो मृदादिवज्जडत्वनियमादिति ॥ १३ ॥ किंच विकारिवस्तुनो विकाराणांच किं भेद उताऽभेदः ॥ नाऽऽद्यः । भिन्नयोर्गवाश्वयोरिव विकारविकारिभावानुपपत्तेरित्यभिप्रेत्य द्वितीयपक्षे दूषणमाह ॥

तेन तेन हि रूपेण जायते ली
यते मुहुः ॥ विकारिवस्तुनस्ते-
षामनुसंधातृता कुतः ॥ १४ ॥

तेनेति । तेन तेन रूपेण उत्पत्त्यादिविकाररूपेण तदभिन्नं विकारि वस्त्वपि जायते उत्पद्यते मुहुः शश्वल्लीयते नश्यति च तयोरभेदादित्यर्थः हि यस्मादेवं तस्मात्तस्य विकारिवस्तुनस्तेषां विकाराणामनुसंधातृता कुतः अनुसंधानं कुतो नकुतोऽपि भवेदित्यर्थः ॥ तत्तद्विकाररूपेण तदा तदा नश्यतः विकारिवस्तुनः कथं कालांतरीयविकारानुसंधानं घटते न कथंचिदित्यर्थः ॥ १४ ॥

नत्वात्मा स्वयंविकारि सन्नप्यात्मन इतरेषां च विकारान्विजानातु न च तस्य विकारित्वाविशेषे कथं स्वेतरपरिज्ञान मिति वाच्यं। शिलात्वाविशेषेऽपि रत्नस्य स्वभावाविशेषेण स्वेतरावभासकत्ववदात्मनोऽपि स्वभावावशेषेण स्वेतरविकारानुसंधानोपपत्तेः। न च तेन तेन विकारेण साकं नष्टस्य कथं सर्वविकारानुसंधानामिति वाच्यं। तस्य विकारेण आत्मनो विकारैरत्यंताभेदस्याऽनंगीकारात् किंतु ईषद्भेदघटिता भेदतादात्म्यस्यैव तंतुपटयोरिवाऽङ्गीकारादित्याशंक्य एवमप्यात्मन आद्यंतविकारद्वयानुसंधानं न संभवतीत्याह ॥ ॥ ॥ ॥

नच स्वजन्मनाशं वा द्रष्टुमर्हति कश्चन ॥ तौ हि प्रागुत्तराभावचरमप्रथमक्षणौ ॥ १५ ॥

नचेति। कश्चन कश्चिन्निपुणोऽपि स्वजन्म स्वोत्पत्तिर्नाशं ध्वंसं वा द्रष्टुं ज्ञातुं नाऽर्हति न शक्नोतीत्यर्थः। तत्र हेतुमाह। तौहीत्यादिना। हि यस्मात्तौ जन्मनाशौ प्रागुत्तराभावचरमप्रथमक्षणौ प्रागुत्तरौ यावभावौ तौ प्रागभावप्रध्वंसाभावौ तयोर्यौ चरमप्रथमक्षणौ तौ प्रागुत्तराभावचरमप्रथमक्षणौ प्रागभावचरमक्षण उत्पत्तिर्वस्तुनः प्रध्वं-

साभावप्रथमक्षणो नाश इत्यर्थः। तस्माज्जन्मनाशौ प्रागुत्तराभावचरमप्रथमक्षणौ तस्मात्स्वजन्मनाशं वा द्रष्टुं नाऽर्हतीति संबंधः। इदमत्राऽऽकूतं। आत्मा हि स्वसमानकालीनवस्त्वेव जानातीति वक्तव्यं। दीप इव स्वसमानकालीनपदार्थावभासकः तथाच स्वावस्थानसमये विद्यमानयोः प्रागभावप्रध्वंसाभावयोः परिज्ञानाभावे कथं प्रागभावचरमक्षणरूपं जन्म प्रध्वंसाभावप्रथमक्षणरूपं नाशंच जानीयात् न कथंचिदित्यर्थः। तयोश्चासिद्धौ मध्यवर्तिविकाराणामप्यसिद्धेरेव तेषां विकाराणामुत्पत्तिविनाशसमानाश्रयत्वनियमात्। तदुक्तं भाष्यकारैर्वाक्यवृत्तौ। "देहेंद्रियमनःप्राणाऽहंकृतिभ्यो विलक्षणः। प्रोज्झिताशेषषट्भावविकारस्त्वंपदाभिधः" इति॥ ततश्चाऽऽत्मा निर्विकारत्वाद्ब्रह्मैवेत्यर्थः॥ १५॥ ॥ ॥

ननु पूर्वोक्तं सर्वं वृथाऽऽत्मन उक्तस्वरूपब्रह्मत्वज्ञाने प्रयोजनाभावात् नच संसारनिवृत्तावात्मनो ब्रह्मत्वज्ञाने प्रयोजनमिति वाच्यं। तन्निवृत्तेरसंभवात् संसारो ह्यात्मनि अहंकारोपाधिना प्रतीयमानः कर्तृत्वादिभिः स च न ज्ञानेन निवर्तयितुं शक्यः तस्याऽऽत्मनि सोपाधिकभ्रमस्य च यावदुपाध्यवस्थानं तत्त्वज्ञानेऽप्यवस्थानात्। लोके सो-

पाधिकभ्रमस्य प्रतिबिंबचलनादेर्यावदुपाधिचलनं प्रतीतेर्न चोपाधेरहंकारस्य ब्रह्मज्ञानेन निवृत्तौ तत्प्रयुक्तस्याऽऽत्मनि प्रतीयमानकर्तृत्वादेरपि निवृत्तिरिति वाच्यं तस्य मूलाज्ञाने सति निवृत्तेरसंभवात् न च मूलाज्ञानस्याऽप्यात्मनि विद्यमानस्य ब्रह्मज्ञानान्निवृत्तिरिति वाच्यं । तस्यकल्पकाभावेनाऽकल्पिततया ज्ञानेन निवर्तयितुमशक्यत्वात् अन्यथा ज्ञानस्य अवस्थानप्रसंगादित्याशंक्य अज्ञानस्य ज्ञानानिवर्त्यत्वसिद्धये कल्पितत्वं वक्तुं तस्याऽवस्तुतोऽसंभवमाह ॥ ॥ ॥ ॥

न प्रकाशोऽहमित्युक्तिर्यत्प्रकाशै
कबंधना ॥ स्वप्रकाशतमात्मा-
नमप्रकाशः कथं स्पृशेत् ॥ १६॥

नप्रकाशोति । अहं न प्रकाशेन भामीत्युक्तिर्वचनं यत्प्रकाशैकबंधना यस्य प्रकाशः स्वरूपप्रकाशः एक एव बंधनं निमित्तं यस्याः सा तथोक्ता न प्रकाश इति व्यवहारस्य स्वप्रकाशानुभवनिमित्तत्वादित्यर्थः ॥ तं प्रकाशं स्वयमेव भासमानमात्मानमप्रकाशः अज्ञानं कथं स्पृशेत् आवृणुयान्न कथंचिदित्यर्थः ॥ अयं भावः । आत्मा हि सर्वदा स्वयंभासमानः सन् सर्वं भासयति कथमज्ञानेन प्रकाशविरोधिना स्पृशेत् । नहि

खरतराकिरणशालिदिनकरस्तमसा स्पृश्यमानो दृश्यते तत्कस्यहेतोः प्रकाशाप्रकाशयोर्विरोधात् तथा च अज्ञानस्याऽऽत्मनि युक्त्यसहत्वान्न परमार्थतः संभव इति ॥ १६ ॥ ॥ ॥

ननु कथंतर्हि न प्रकाश इत्यात्मनि अज्ञानानुभव इत्याशंक्य सूर्ये पेचकादीनामंधकारप्रतीतिवद्भ्रांत्या ह्युपपद्यत इत्याह। तथाप्येति। यद्यपि वस्तुत आत्मन्यज्ञानं न संभवति तथाप्येषोऽप्रकाशः अवश्यायो नीहारः अवश्यायवदवश्यायः आवरकत्वात् चिदाकाशे चित्प्रकाशात्मनि आभातीति संबंधः। अज्ञानस्य वस्तुतोऽसत्वे कथं प्रत्यक्षप्रतीतिः॥ नह्यसतः शशविषाणादेः प्रत्यक्षप्रतीतिरस्तीति तत्राऽऽह

तथाऽप्याभाति कोऽप्येष विचारा
भावजीवनः॥ अवश्यायश्चिदा-
काशे विचारार्कोदयावधिः।१७।

। कोऽपीति । कोऽपि सत्त्वासत्त्वाभ्यामनिर्वचनीयाप्रकाशस्याऽसद्विलक्षणत्वांगीकारान्न प्रत्यक्षप्रतीत्यनुपपत्तिरित्यर्थः ॥ नन्वेवमपि अप्रकाशस्याऽऽत्मन्यनुभवो नोपपद्यते। तथाहि। किं जडवस्त्वप्रकाशविरोधी उत स्वप्रकाश आत्मा । नाऽऽद्यः। जडाप्रकाशयोः परस्परविरोधासंभवात्। नाऽपि द्वि-

तीयः । तस्य विरोधिनि स्वप्रकाशात्मन्यवस्थाना-
नुपपत्तेः। नचाऽहं न प्रकाश इत्यज्ञानसाधकस्य त-
स्य नाऽज्ञानाविरोधित्वमिति वाच्यं । आत्मस्वरूप-
स्य प्रकाश्यस्याऽविरोधित्वे अन्यस्याऽपि विरोधिनो
ऽभावात्कदापि निवृत्तिर्न स्यात्तत्राऽऽह । विचारा-
र्कोदयावधिरिति । विचारो विचारजन्यज्ञानमेवाऽ
र्कः सूर्यस्तमोनिवर्तकत्वात्तस्योदय उत्पत्तिः साऽ
वधिर्मर्यादा यस्याऽप्रकाशस्य स विचारार्कोदयाव-
धिरित्यर्थः । केवलात्मनो विरोधित्वेऽपि अखंडाका
रवृत्त्यारूढात्मचैतन्यस्य तन्निवर्तकत्वोपपत्तेः । केव-
लसूर्यकिरणस्याऽदग्धृत्वेन तृणादिभासकत्वेऽपि सू-
र्यकांतसंयुक्तस्य तस्य दग्धृत्वदर्शनादितिभावः ।
किमिति तर्हि वाक्यजन्याखंडाकारवृत्तौ सत्यामपि
सर्वेषामात्माज्ञानं न निवर्तत इत्याशंक्य विचारा-
भावजीवन इति विचाराभाव एव श्रवणमननरूपयो-
र्वेदांतप्रमाणतत्प्रमेयब्रह्मविषयविषयिणोर्विचारयोर
भाव एव जीवनमवास्थितिर्हेतुर्यस्याऽप्रकाशस्य स वि
चाराभावजीवन इत्यर्थः। वाक्यजन्याऽप्यखंडाकार
वृत्तिरसंभावनादिभिः प्रतिबद्धा सती नाऽज्ञानं नि
वर्तयति यथा मणिमंत्रादिभिः प्रतिबद्धोऽग्निःसंयु
क्तमपि तृणादिकं न दहति तद्वत् । तदुक्तं सर्वज्ञा
त्ममुनिभिः । "पुरुषापराधमलिना धिषणा निर

वह्निचक्षुरुदयोऽपि यथा। न फलाय भर्जुविषया भवति श्रुतिसंभवाऽपि तु तथाऽऽत्मनि धीः" इति। यदा तु सम्यग्विचारेणाऽसंभावनादयो निवर्तंते तदा अप्रतिबद्धा सती अज्ञानं निवर्तयाति । यथा मण्यादिप्रतिबंधनिवृत्तावग्निस्तृणादिकं दहति तद्वत्। एतदपि तैरेवोक्तं। "पुरुषापराधविगमे तु पुनः प्रतिबंधकव्युदसनात्सफला । मणिमंत्रयोरुपगमे तु यथा सति पावकाद्भवति धूमलता" इति। तथा चाऽज्ञानस्याऽनिर्वचनीयस्य कल्पितत्वेन ज्ञानान्निवृत्त्युपपत्तिः। नच तस्य कल्पकाभावोऽज्ञानस्य लोके दीपवत्। भाट्टपक्षे स्फुरणवत्। गुरुमते संवदेनवत्। गुरुबौद्धव्यतिरिक्तमते भेदवच्च। स्वपरनिर्वाहकत्वान्नाऽप्यनवस्था अज्ञानांतरस्याऽनंगीकारात्। तथा चाऽज्ञानस्य ज्ञाननिवृत्तौ मूलोच्छेदेनाऽहंकारस्य निवृत्तिसंभवादात्मनि प्रतीयमानस्याऽहंकारोपाधिप्रयुक्तस्य कर्तृत्वादिरूपसंसारस्याऽपि निवृत्तिर्भवतीति प्रत्यगात्मनो ब्रह्मत्वज्ञानं सफलमिति भावः १७

ननु ब्रह्मव्यतिरिक्तस्य सर्वस्याऽज्ञानकल्पिततया परमार्थतोऽसत्त्वे कर्मकांडाप्रामाण्यं स्यात्। स हि स्वर्गकामादेर्यागादिकर्तव्यतां बोधयति तच्च नियोगस्याऽपूर्वस्य नियोज्यस्य पुरुषस्य नियोगविषयस्य यागस्य नियोगफलस्य स्वर्गस्य च परमार्थतोऽसत्त्वे

बोधनमनुपपन्नं स्यात् ब्रह्मव्यतिरिक्तस्य परमार्थतोऽसत्त्वे उपनिषद्प्रामाण्यं स्यात्तत्राऽपि हि मोक्षकामस्य आत्मा वा अरे द्रष्टव्य इत्यादिना श्रवणादिकर्तव्यता बोध्यते तस्याऽप्यप्रामाण्यं युक्तं। कर्मकांडोपनिषदेकदेशयोरपि ब्रह्मवाक्येन सह संप्रदायस्य तुल्यत्वादित्याशंक्य किं तत्त्वज्ञानोत्तरकालं कर्मकांडाद्यप्रामाण्यमापद्येत किं वा ततः पूर्वकाले। नाऽऽद्यः। तदुत्तरकालं तदप्रमाण्यस्य गार्हस्थ्यब्रह्मचारिधर्मवेदश्रुतेरिव संन्यासाश्रमकालेऽग्निहोत्रादिश्रुतेरिव चेष्टत्वादित्याभिप्रेत्य द्वितीयं प्रत्याह ॥

आत्माज्ञानमहानिद्राजृंभितेऽस्मि-
ञ्जगन्मये ॥ दीर्घस्वप्ने स्फुरंत्येते
स्वर्गमोक्षादिविभ्रमाः ॥ १८ ॥

आत्मेति। आत्माज्ञानमहानिद्राजृंभिते आत्माज्ञानं प्रत्यगात्माश्रयविषयमज्ञानं तदेव महती निद्रा अनादिकालमारभ्य प्रवृत्तत्वात् स्वरूपावरणपूर्वकं विपरीतरूपहेतुत्वाच्च ततो जृंभिते उत्पन्ने जगन्मये जगद्रूपेऽस्मिन्ननुभूयमाने दीर्घस्वप्ने तत्त्वज्ञानपर्यंतमनुवर्तमाने एते स्वर्गमोक्षादिविभ्रमाः स्वर्गमोक्षौ आदिर्येषां विभ्रमाणां ते तथा स्वर्गशब्दस्तत्कामिनि योज्यनियोगतद्विषययागादेरप्युपलक्षणमादिश-

व्दौ लौकिकव्यवहारानुकूलपुत्रामत्रादिसंग्रहार्थः मोक्षशब्दश्च तत्साधनतज्ज्ञानतत्साधनश्रवणादेरप्युपलक्षणं । मोक्षस्य बंधसापेक्षत्वात् । बंधस्य च मिथ्यात्वाद्बंधसापेक्षमोक्षस्याऽपि विभ्रमत्वं द्रष्टव्यं । स्फुरंति स्फुरंत्येवेत्यर्थः । अयं भावः । तत्त्वज्ञानात्पूर्वकाले व्यावहारिकसत्यस्य सर्वजगतो नियोज्यनियोगादेः सत्यत्वेन प्रबोधात्पूर्वं स्वप्न इव सर्वव्यवहारोपपत्तेर्न कर्मकांडाद्यप्रामाण्यं । तस्य व्यावहारिकप्रामाण्यस्य च सत्त्वात्तावता च तस्य चरितार्थत्वे तत्पराणामगतिकानां ब्रह्मवाक्यानां तात्त्विकप्रामाण्यस्याऽप्यनंगीकारे किंचिदपिप्रामाण्यं न स्यात् । प्रकारभेदेनोभयप्रामाण्योपपत्तौ च सर्वात्मना तदप्रामाण्यं न युक्तं । तदुक्तं सकलवेदार्थज्ञेन ब्रह्मणाऽपि । " सत्यार्थो हि द्विधा प्रोक्तो मया हे स्वर्गवासिनः । एकः स्वभावतोऽसाक्षा त्परमार्थः सहैव तु ॥ सशिवः सत्यचैतन्यसुखानंतः स्वलक्षणः । अपरः कल्पितः साक्षात्ब्रह्मण्यध्यस्तमायया ॥ व्यावहारिकसत्यार्थं साक्षात्सत्यार्थचिद्घनं । उभयं वक्ति वेदस्तु मार्गानेवं वदंति हि " इति ॥ अतोऽद्वितीयब्रह्मण एव परमार्थसत्यत्वेऽपि व्यावहारिकसत्यत्वेनाऽर्थवत्त्वान्न कर्मकांडाद्यप्रामाण्यमिति ॥ १८ ॥ ॥ ॥

नन्वेवमपि जीवस्य भोक्तुस्तद्भोग्यजातस्य च ब्रह्म-मात्रत्वे अनुभूयमानभोक्तृभोग्यविभागो न स्यात्स-र्वस्य ब्रह्मणि अध्यस्तत्वाविशेषादित्याशंक्य मा-यावशादेव विभागोऽयमुपपद्यत इत्याह ॥ ॥

जडाजडविभागोऽयमजडे मयि कल्पितः ॥ भित्तिभागे समे चित्रं चराचरविभागवत् ॥ १९ ॥

जडेति।जडाजडविभागः जडमिदं भोग्यमजडोऽयं भोक्तेति विभागः। अयं प्रतीयमानः। अजडे अलुप्तचैतन्यस्वप्रभावे मयि प्रत्यगभिन्ने ब्रह्मणि कल्पितः मायया अपरोपित इत्यर्थः । स्वप्रकाशेऽप्येकस्मिन् ब्रह्मणि उपाधिप्राधान्यात् ॥ भोग्यजकल्पना उपाधेयप्राधान्यादजडभोक्तृकल्पनाऽप्युपपद्यते । तदुक्तं वार्तिककृता। "तमःप्रधानः क्षेत्राणां चित्प्रधानः चिदात्मनां । परः कारणतामेति भावनाज्ञानकर्मभिः" इति ॥ अजडे ब्रह्मणि सदृशविसदृशोभयकल्पने दृष्टांतमाह । भित्तिरित्यादिना । भित्तिभागे कुड्यप्रदेशे समे निर्विकारे अचले इत्यर्थः । चराचरविभागवत् । चरस्य जंगमादेरचरस्य पर्वतादेश्च विभागो यथा तथेत्यर्थः ॥ १९ ॥ ॥

नन्वेवमप्यात्मनो ब्रह्मत्वं न संभवति तस्य सं-

सारसाक्षिता रूपविकल्पयुक्तत्वाद्ब्रह्मणश्चाऽस्थूलमनणु नेतिनेतीत्यादिश्रुत्या निर्विकल्पकतया सिद्धिरित्याशंक्याऽऽह ॥ ॥ ॥ ॥

चेत्योपरागरूपा मे साक्षिताऽपि
न तात्त्विकी ॥ उपलक्षणमेवेयं
निस्तरंगचिदंबुधेः ॥ २० ॥ ॥

चेत्योपरागेति । चेत्योपरागरूपा चेत्यं कर्तृत्वादिसर्वप्रपंचः तेनोपरागः संबंधः तद्रूपा साक्षिताऽपि साक्षित्वमपि मे मम प्रत्यगात्मनः न तात्त्विकी न परमार्थभूता चेत्यस्य अपरमार्थत्वेन तत्संबंधिसाक्षितायाः अपि परमार्थस्वरूपत्वायोगात् । किंत्वियं साक्षिता निस्तरंगचिदंबुधेः निस्तरंगः परमार्थतो निरस्तस्तरंगः कर्तृत्वादिप्रपंचरूपो यस्याः सा चिदेवांऽबुधिः । समुद्रो निस्तरंगाचिदंबुधिस्तस्य मम प्रत्यगात्मन उपलक्षणमेव तटस्था सती ज्ञापिकैव जगत्कारणत्वमिव ब्रह्मणस्तथा चाऽऽत्मनः वस्तुतो निर्विकल्पत्वान्न ब्रह्मत्वानुपपत्तिरिति भावः ॥ २० ॥ ॥ ॥ ॥

एवमुक्तप्रकारेण ब्रह्मणि जगतः आत्मनि चाऽहंकारादेः कल्पितत्वेन वस्तुतः अभावात् पदद्वयलक्ष्ये ब्रह्मणि न कश्चिदपि विकल्पावसर इत्याह ।

अमृताब्धेर्न मे जीर्णिर्मृषाडिंडी-
रजन्मभिः ॥ स्पटिकाद्रेर्न मे रा-
गः स्वाभ्रसंध्याभ्रविभ्रमैः ॥२१॥

अमृताब्धेरिति। अमृत मोक्षरूपः स्वयंप्रकाशानंद एवाऽब्धिः तस्य तत्पदलक्षस्येत्यर्थः । मे मम प्रत्यगभिन्नब्रह्मणः मृषाडिंडीरजन्मभिः मृषारूपा मिथ्यारूपाविपदादय एव डिंडीराः फेनास्तेषां यानि जन्मानि तैर्जन्मपदं नाशस्याऽप्युपलक्षणं जीर्णिर्नहानिर्वृद्धिर्वा जीर्णपदं वृद्धेरप्युपलक्षणं च मिथ्यावस्तुनो अधिष्ठानादूषिकत्वादित्यर्थः । ब्रह्मणि मायया विपदाद्युत्पत्त्यातदधिष्टानब्रह्मणो न हानिर्नवृद्धिरित्येतद्भारतीतीर्थैरपि कूटस्थदीपे भणितं । " मायामेघो जगन्नीरं वर्षत्वेष यथा तथा। चिदाकाशस्य नो हानिर्न वा लाभ इति स्थितिः" इति । त्वंपदलक्ष्यमपिशुद्धमित्याह । स्पाटिकाद्रेरित्यादिना । स्फटिकाद्रेः स्फटिकाद्रिवत्स्वच्छस्य मम प्रत्यगात्मनस्त्वंपदलक्ष्यस्य स्वाभ्रसंध्याभ्रविभ्रमैः अविद्याकल्पिताहंकारादिः स एव संध्याभ्रं संध्याकालीनो मेघः स्वसन्निहितस्वच्छस्वधर्मासंगत्वसाम्या तत्कृतैर्विभ्रमैःकर्तृत्वादिभिः भ्रांतिभिर्मेघविषये विभ्रमाः अनवस्थानानि संसाराः तै रागः सं-

बंधो मेघविषये आरुण्यं स्फटिकपर्वतस्याऽरुण्यवत् आत्मनः परमार्थतः कर्तृत्वभोक्तृत्वरागद्वेषादिसंबंधो नाऽस्तीत्यर्थः । अहंकारादिधर्मैरात्मनो संबंधोऽपि श्रीभारतीतीर्थैरेवाऽभाणि चित्रदीपे। "अहंकारगते छाद्यैर्देहव्याध्यादिभिस्तथा ॥ वृक्षादिजन्म नाशैर्वा चिद्रूमात्मनि किं भवेत्" इति॥ अतः पदद्वयलक्ष्यमपि चैतन्यमतिशुद्धमिति भावः ॥ २१ ॥

नन्वेवमपि पदद्वयलक्ष्ये ब्रह्मण्यस्त्येव विकारः। तस्य परमार्थतः सत्त्वाश्रयस्य वक्तव्यत्वात् अन्यथा शशविषाणवदसत्त्वप्रसंगादित्याशंक्याऽऽह ॥

स्वरूपमेव मे सत्त्वं न तु धर्मो न-
भस्त्ववत् ॥ मदन्यस्य सतो भा-
वान्न हि सज्जातिरिष्यते॥२२॥

स्वरूपमिति । मे मम पदद्वयलक्ष्यस्य सत्त्वं स्वरूपमेव नतु मदाश्रितो धर्मः सत्त्वांतराश्रयत्वाभावेऽपि न मे असत्त्वं यथासत्त्वस्य सत्वांतराश्रयत्वाभावात्। नाऽसत्त्वं तद्वदित्यर्थः। ननु घटे घटत्ववत् सद्रूपे आत्मन्यपि धर्मरूपं सत्त्वं किं न स्यादित्याशंक्य घटेष्वनेकेषु घटोऽयं घटोऽयमित्यनुगतव्यवहारसिद्धये घटत्वजातिरिव सद्व्यक्तिभेदाभावेनाऽऽत्मनि सत्त्वरूपा जातिर्नाऽङ्गीकार्येत्याह। मदन्यस्येत्यादिना।

मदन्यस्य पदद्वयलक्ष्यरूपात्माभिन्नस्य सतः सद्व्यक्त्यंतरस्याऽभावात्। सा सत्त्वरूपा जातिर्नेष्यते। एकव्यक्तौ जात्यनंगीकारे दृष्टांतमाह। नभस्त्ववदिति। घटादिष्वनुगतव्यवहारार्थं घटत्वजातिरंगीक्रियते। अत्र तु क्ष्मिदादेः सर्वस्य मिथ्यात्वेन सदंतरस्याऽभावाऽन्नाऽनुगतव्यवहारार्थंघटत्ववज्जातिरूपं सत्त्वमंगीक्रियते। किंतु स्वरूपमेव तत्। ननु घटः सन्पटः सन्कुड्यं सदित्यादिप्रतीत्यनुरोधेन घटपटाद्युपाधिभिन्नेष्वाकाशेषु अनुगतमहाकाशेनेव अनुगतव्यवहारापत्तेः। तस्मान्न सत्त्वं जातिः। अत एव नोपाधिरपि अनुगतव्यवहारायैव तस्याऽपि कल्पितत्वात् सत्त्वस्य सन्मात्रब्रह्मरूपत्वं वाशिष्ठेनाऽप्युक्तं। "विशेषं संपरित्यज्य सन्मात्रं यदलेपकं। एकरूपं महारूपं सत्तायास्तत्परं विदुः" इति। तथा च सत्त्वस्य रूपत्वेन धर्मत्वाभावादत्यंतं शुद्धमेव पदद्वयलक्ष्यमिति भावः॥ २२॥

नन्वेवमप्यात्मनो ज्ञानाश्रयत्वमंगीकर्तव्यं अन्यथा घटादिवदनात्मत्वप्रसंगात्। ज्ञानाश्रयस्यैवाऽऽत्मत्वादहं जानामीत्यात्मनो ज्ञानाश्रयत्वप्रतीतेश्च तथा च साक्षी चेता केवलो निर्गुणश्चेत्यादिश्रुत्या कथं निर्गुणब्रह्मत्वमात्मन इत्यत आह॥

स्वरूपमेव मे ज्ञानं न गुणः स गुणो यदि॥ अनात्मत्वमसत्त्वं वा ज्ञेयाज्ञेयत्वयोः पतेत् ॥ २३ ॥

स्वरूपमेवेति । मम ज्ञानं चैतन्यं स्वरूपमेव न-तु मदाश्रितो गुणः कुत इत्यत आह । स गुणो यदीत्यादिना । स चैतन्यं विधेयापेक्ष-या पुल्लिंगनिर्देशः । चैतन्यं गुण इति वदन्वादी प्रष्टव्यः किं तेन आत्मा विषयीक्रियते न वा। उभय-थाऽपि दूषणमाह। अनात्मत्वमिति। ज्ञेयाज्ञेयत्वयो-रात्मनो विद्यत्वे अनात्मत्वं घटादिवदवेद्यत्वे चाऽस त्त्वं शशविषाणवदापतेद्भवेदित्यर्थः। यदि आत्मनः स्वसमवेतज्ञानाविषयत्वमुच्यते। तदा अज्ञायमान-त्वेन आत्मनो असत्त्वं स्यात्। नहि प्रमाणतो ज्ञा-यमानं शशविषाणमस्तीति केनाचित्प्रतिपद्यते। त-द्दोषजिहीर्षया तस्य ज्ञायमानत्वमुच्येत तदा घटादि-वदनात्मत्वमात्मनः स्यात्। ज्ञानाविषयस्याऽनात्म-त्वानियमात्। नन्वात्माश्रितज्ञानेन आत्माश्रयत्वेन भासते न विषयत्वेन येन घटादिवदनात्मत्वंस्यादि-ति चेन्न । ज्ञानव्यतिरिक्तस्य ज्ञानाधीनप्रकाशस्य ज्ञानाविषयत्वनियमेन आत्मनोऽपि ज्ञानाधीनप्रका-शस्य विषयताया आवश्यकत्वेन अनात्मत्वदोषता

तावत्स्यात् ॥ नच ज्ञानाश्रयत्वमात्मत्वे प्रयोजकं लाघवात् । ज्ञानस्यैव तत्प्रयोजकत्वादहं जानामीति प्रतीतेश्च अहंकाराश्रयवृत्तिविषयत्वात् नच ज्ञानं नष्टं ज्ञानमुत्पन्नमिति प्रतीत्या तस्य जन्मादिमतः आत्मत्वमनुपपन्नमिति वाच्यं तस्याऽपि वृत्तिविषयत्वात्तस्मादात्मनो न ज्ञानं गुणः किंतु स्वरूपमेव बादरायणोऽपि अतज्ज्ञ एवेत्यात्मनो ज्ञानस्वरूपत्वं सूत्रयां बभूव सूत्रस्याऽर्थो विद्यारण्यगुरुभिरधिकरणरत्नमालायां दर्शितः ।"अचिद्रूपोऽपि चिद्रूपो जीवो चिद्रूप इष्यते । चिदभावात्सुषुप्त्यादौ जाग्रच्चिन्मनसा कृता" इति पूर्वपक्षे प्राप्ते सिद्धांतमाह । ब्रह्मत्वादेव चिद्रूपश्चित्सुषुप्तौ न लुप्यते । द्वैतादृष्टिर्द्वैतलोपान्नहि द्रष्टुरितिश्रुतेः" इति । ननु ज्ञानस्वरुप आत्मा स्वात्मानं जानाति चेद्युगपत्कर्मकर्तृत्वप्रसंगः । न चेज्जानाति तस्याऽसत्त्वप्रसंग इति चेन्न तस्य स्वप्रकाशत्वेन ज्ञानांतरमनपेक्षेव भासमानत्वान्नाऽपि तस्य कर्मकर्तृत्वं च स्वविषयत्वानंगीकारात् । अत उक्तं विद्यारण्यगुरुभिः पंचकोशविवेके । "स्वयमेवाऽनुभूतत्वाद्विद्यते नाऽनुभाव्यते । ज्ञातुर्ज्ञानांतराभावादज्ञेयो न त्वसत्तया" इति । यत्प्रसादाद्धि सर्वं जगद्भासते स कथं नाऽस्ति न प्रकाशते वा आत्मनः सर्वावभासकत्वं स्वस्याऽनपेक्षतया भासमानत्वं

च आत्मयोगाचिद्वंशेऽप्युक्तं । " अज्ञानतत्कार्यत दीयभेदानध्यक्षयंती निजसत्तयैव । स्मर्तु च विस्मर्तुमहो नु शक्त्या सुप्त्यादिषु स्वप्रभयाऽस्मि सा चित् । इति तस्मादात्मा ज्ञानरूपो न ज्ञानगुणक इति स निर्गुणं ब्रह्म भवेदिति भावः ॥ २३ ॥ ॥

एवं आत्मन आनंदोऽपि न गुणः किंतु स्वरूपमेवेति साधयति । अहमिति ॥ ॥ ॥

अहमेव सुखं नाऽन्यदन्यच्चेन्नैव
तत्सुखं ॥ अमदर्थं न हि प्रेयो
मदर्थं न स्वतः प्रियं ॥ २४ ॥

अहमात्मासुखमेव सुखस्वरूप एव नतु सुखगुणकः यदि सुखं आत्मनोऽन्योगुणः स्यात्तत्सुखत्वेनाऽभिमतं नैव सुखं स्यात् कुत इति चेत्किं तदनात्मभूतं सुखं अनात्मशेष उत तच्छेषो वा नाऽद्यइत्याह । अमदर्थं इति ॥ अमदर्थं चेदित्यनुषंगः । आत्मशेषो । नचेत्तर्हि न तत्प्रेयः प्रीतिविषयो न भवेत् । आत्मशेषसर्पादौप्रीतिविषयत्वादर्शनात् ॥ न द्वितीयइत्याह । मदर्थमिति अत्राऽपि चेदित्यनुषज्यते । मदर्थमात्मशेषश्चेत्स्वतःप्रियं न स्यात् । आत्मशेषस्य पुत्रभार्यादेः स्वतः प्रीतिविषयत्वादर्शनादित्यर्थः । सु-

खं हि सर्वेषां प्रियं भवति तच्च स्वत एव प्रियं न परोपाधिना । अत आत्मैव भवितुमर्हति । कथमिति चेच्छृणु जगति हि सर्वेषां पदार्थानां चतुर्थावस्थितिः। आत्माप्रियोऽप्रिय उपेक्ष्यश्चेति। सुखं तावत् । न व्याघ्रादिवदप्रियं तस्य सर्वैः प्रार्थ्यमानत्वात्। अत एव न लोष्ठादिवदुपेक्ष्यं । नाऽपि प्रियमात्रं तच्छेष पुत्रभार्यादावपि तद्दर्शनात् । अतःपरिशेषादात्मैव । नन्वात्मशेषत्वेन तस्य प्रीतिविषयत्वं किं न स्यात् इति चेत्तर्हि वक्तव्यं। आत्मनि प्रीतिः किंनिमित्तेति येन सुखमपि तच्छेषतया प्रियं जायते सुखसाधनत्वादितिचेतर्हि सुखसाधनेन आत्मना उपकार्यः कश्चिद्वक्तव्यः स्रक्चंदनादिसुखसाधनेनान्यस्यैवोपकार्यत्वदर्शनात् । आत्मनि च कर्मकर्तृविरोधात् सचोपकार्योऽन्यो न दृश्यते तस्मान्नसुखसाधनतया आत्मा प्रियः किंतु सुखरूपतया तस्मान्नाऽऽत्मशेषतया सुखस्यापि प्रियत्वं किंवात्मतयैव। ननुसुखमुत्पन्नं नष्टमिति प्रतीयमानस्य कथमात्मत्वमिति चेन्न। तस्य तद्व्यंजकवृत्तिविषयत्वात्सर्वमेतदुक्तंब्रह्मानंदैः ॥ आत्माशेषंउपेक्ष्यं च द्वेष्यं चेति चतुर्ष्वऽपि ॥ आत्माप्रेयान्प्रियः शेषो द्वेषो पेक्षेतदन्ययोः । इति व्यवस्थितो लोके याज्ञवल्क्यमतं च तत् ॥ सुखसाधनतोपाधेरन्नपानादयः प्रियाः ।

आत्मानुकूल्यादन्नादिः समश्चेदमुनात्मकः ॥ इति अनुकूलयितव्यः स्यान्नैकस्मिन्कर्मकर्तृतेत्यादि ॥ आत्मनः सुखरूपत्वं सर्वज्ञात्ममुनिभिरप्युक्तं ॥ सर्वं यदर्थमिह वस्तु यदस्ति किंचित्पारार्थ्यमुज्झति च यन्निजसत्तयैव ॥तद्वर्णयंति ह सुखं सुखलक्षणज्ञास्तत्प्रत्यगात्मनि समं सुखताऽस्यतस्मादिति ॥ ब्रह्मगीतासु च प्रत्यग्रुपः शिवः साक्षात्परमानंदलक्षणः परप्रेमास्पदत्वेन प्रतीतत्वात्सुरर्षभइत्यादि । सर्वस्यैव तु कामाय न सर्वं भवति प्रियम्॥किंत्वात्मनस्तु कामाय ततः प्रियतमः स्वयं ॥अतःप्रियतमो ह्यात्मा सुखवत्सु विलक्षण इत्यादि । तस्माद्युक्त्या विद्वदनुभूत्याबहुविदां वचनैश्च आत्मा सुखस्वरूप इत्यत्र न कश्चिद्विवाद इतिभावः ॥ २४ ॥

नन्वेवमपिब्रह्मणः एकथैवानुद्रष्टव्यमिति श्रुत्युक्तमखडैकरसत्वं न संभवति । उक्तप्रकारेण तस्य सच्चिदानंदरूपत्रयात्मकत्वात् न च सच्चिदानंदानां तेषां त्रयाणामपि अत्यंताभेद इति वाच्यं । तथात्वे तद्वाचकानां सच्चिदानंदशब्दानां त्रयाणामपि पर्यायतया सह प्रयोगानुपपत्तेः । न हि घटकुंभकलशादिशब्दानामेकार्थवाचकानां सह प्रयोगोऽस्तीत्याशंक्य ब्रह्मणोऽखंडैकरसत्वमुपपादयति । नहीति ।

नहि नानास्वरूपं स्यादेकं वस्तु

कदाचन ॥ तस्मादखंड एवास्मि
विजहज्जागतीभिदां ॥ २५ ॥

एकमद्वितीयं सच्चिदानंदात्मकं ब्रह्म कदाचन कदाचिदपि उपाधिकाले तदभावकालेपि नानास्व रूपंनानारसं न स्यात् न भवतीत्यर्थः। तत्रहेत्वभि प्रायेण वस्त्वितिविशेषणं यतः वस्तु परमार्थभूतंतत इत्यर्थः॥ वस्तुग्रहणं ज्ञानानंदयोरप्यु पलक्षणंअय-मर्थः ब्रह्मणि सत्यज्ञानानंदानां परस्परभिन्नत्वे सत्यस्य सत्यत्वं ज्ञानस्य ज्ञानत्वं आनंदस्या ऽऽनंदत्वं नच सिद्धेत। कथमिति चेत्सत्यं यदि ज्ञानाद्भिन्नंस्यात् जडस्य तस्य शुक्तिकारूप्यादे रिव सत्यत्वं न स्यात्। एवं यदि ज्ञानमपिसत्या द्भिन्नं स्यादसत्यस्य ज्ञानस्य जडत्वनियमेन ज्ञान त्वं न स्यात्। ततः सत्यज्ञानयोः सत्यत्वज्ञानत्वसि द्धये अत्यंतं परस्पराभेदोङ्गीकर्तव्यः। तदुक्तं सर्वज्ञा त्ममुनिभिः। सत्येऽप्यस्ति ज्ञानताऽज्ञानतायां सत्या त्वं च स्पृष्टमस्त्येव तद्वत्॥ सत्येऽप्येवं नाऽतिरे कावकाशः पूर्णे तत्वे ज्ञानसत्योपपत्तेः इति। एवं यदि ज्ञानानंदोपि भिन्नस्स्यात्। ज्ञानभिन्नस्य तस्य घटादिवदनानंदत्वमेव स्यात् तथाऽऽनंदादपि यदि-ज्ञानं भिन्नंस्यात्। अनानंदस्य तस्य घटादिवत् ज-

ऽत्वेन ज्ञानत्वमेव न स्यात् । ततो ज्ञानानंदयोर पि ज्ञानत्वानंदत्वसिद्धयेऽत्यंतमभेदोंऽगीकर्तव्यः । इदमपि तैरेवोक्तं । आनंदत्वे ज्ञानताऽज्ञानताया मानंदत्वं विद्यते निर्विशंकं ॥ सत्यप्येवं नाऽतिरेका वकाशः पूर्णे तत्वे ज्ञानसौख्योपपत्तेरिति । एवं सत्यानंदोऽपि यदि भिन्नः स्यात् । असत्यस्य तस्य शुक्तिरूप्यादेरिवाऽनंदत्वं न स्यात् । एवं सत्य मपि यद्यानंदाद्भिन्नं स्यात्एवं सत्यत्वं न स्यात् । ततः सत्यानंदयोरप्यत्यंतमभेदो वक्तव्यः । इदमपि तैरेवोक्तं । " आनंदत्वे सत्यतासत्यतायामानंदत्वं निर्विवादं प्रसिद्धं ॥ सत्यप्येवं नाऽतिरेकावकाशः पूर्णे तत्वे सत्यसौख्योपपत्तिरिति ॥ नित्यमुक्तशुद्ध त्वादिष्वप्येवमेवोह्यं । नच तेषामत्यंताभेदे तद्वाचक सच्चिदानंदादिपदानां पर्यायता । वाच्यार्थानां भेद स्यांऽगीकारात् । सत्यपदं मुख्यामुख्यसत्यरूपब्र ह्माकाशशबलरूपे सत्ये व्युत्पन्नं ज्ञानपदं चैतन्यांतः करणवृत्तिरूपमुख्यामुख्यज्ञानद्वयशबलरूपे ज्ञानेव्यु-त्पन्नं । आनंदस्य तस्य आनंदपदं च प्रत्यग् बुद्धिवृ-त्तिरूपमुख्यामुख्यानंदद्वयशबलरूपे आनंदे व्युत्पन्नं । एवंनित्यशुद्धादीन्यपि पदानि मुख्या मुख्यतत्तद्व-यशबलरूपे तस्मिन् तस्मिन् व्युत्पन्नानीतिद्रष्टव्यं । एतत्सर्वं सर्वज्ञात्ममुनिभिरेवोक्तं । " आकाशादौ

सत्यता तावदेका प्रत्यङ्मात्रे सत्यता काचिदन्या ॥ तत्संपर्कात्सत्यता तत्र चाऽन्या व्युत्पन्नोऽयं सत्यशब्दस्तु तत्र ॥ बुद्धेर्वृत्तौ ज्ञानता तावदेका प्रत्यग्बोधे ज्ञानता काचिदन्या ॥ तत्संपर्काज्ज्ञानता तत्रचाऽन्या व्युत्पन्नोऽयं ज्ञानशब्दस्तु तत्र ॥ बुद्धेर्वृत्तो तावदानंदतैका प्रत्यङ्मात्रे काचिदानंदतान्या ॥ तत्संपर्कात्काचिदानंदताऽन्या व्युत्पन्नोऽयं तत्र चाऽनंदशब्दः " इत्यादिनोक्तं । ततो वाच्यार्थभेदस्यां गीकारान्न पदानां पर्यायताऽपीति भावः । ननु कथं तर्हि वाच्यार्थभेदे सत्यादीनामत्यंताभेद उक्त इत्याशंक्य वाच्यार्थभेदेऽपि तल्लक्ष्यार्थानामभेदादित्याह ॥ तस्मादित्यादिना ॥

यस्मात्सत्यादीनां परस्पराभेदेन सत्यादिरूपत्वं यस्माच्च न पर्यायता तस्माज्जागर्तीं भिदां जगदाकाशाद्युपाधिस्तत्प्रयुक्तां भिदां भेदं विजहत् त्यजन्नहमखंड एवाऽस्मि नतु नानारसः इत्यादिपदैर्भागत्यागलक्षणया बोधितसत्याद्यात्मकोऽखंडैकरसोऽस्मीत्यर्थः । अत एकदैवाऽनुद्रष्टव्यमिति श्रुत्युक्तमेकरसत्वमुपपन्नमिति भावः ॥ २५ ॥ ॥

इदानीमुक्तप्रकारेण जीवस्य ब्रह्मत्वोपपादकैस्तर्कैरनुगृहीतं सत् तत्त्वमस्यादिवाक्यं जीवब्रह्मणोरत्यं-

ताभेदं भागत्यागलक्षणया बोधयतीत्याह ॥ परो-
क्षेति ॥ ॥ ॥ ॥ ॥

परोक्षतापरिच्छेदशाबल्यापोह
निर्मलं ॥ तदसीतिगिरालक्ष्य
महमेकरसंमहः ॥ २६ ॥ ॥

परोक्षता परिच्छेदश्च तत्प्रयोजकं शाबल्यं च तानि तथोक्तानि तेषामपोहेन निर्मलं परोक्षतापरिच्छेदशाबल्यापोहनिर्मलं । परोक्षतापरोक्षत्वमीश्वरस्य परिच्छेदः परिच्छिन्नत्वं जीवस्य एतद्द्वयं च जीवेश्वरोभयगतविरुद्ध धर्माणां सर्वेषामित्युपलक्षणं । शाबल्यं जीवेश्वरोभयगतपरोक्षत्वपरिच्छिन्नत्वादिप्रयोजकमायांतःकरणस्वरूपोपाधिद्वयनिमित्तसमस्तसंबंधस्तेषामपोहेन त्यागेन निर्मलं शुद्धत्वमैक्याविरोधीत्यर्थः । तदसीतिगिरा तत्त्वमस्यादिवाक्येन लक्ष्यं जहदजहल्लक्षणया बोध्यं लक्ष्यस्वरूपमेवाऽहमेकरसमिति । महः सत्यानंदचैतन्यरूपमहं प्रत्यगात्माऽस्मीत्यर्थः । अत्राऽप्यनुग्राहकयुक्तिः पूर्ववद्द्रष्टव्या । यद्यात्मा ब्रह्माभिन्नः स्यादात्मनः सर्वांतरत्वलक्षणमात्मत्वं न स्यात् । (एवं ब्रह्माऽपियद्यात्माभिन्नं स्यान्निरतिशयमहत्वलक्षणं ब्रह्मत्वं ब्रह्मणो न स्यात् ) इदमपि तैरेवोक्तं ।

अद्वैतेऽर्थे प्रत्यगर्थोऽस्तितद्वत्प्रत्यक्तत्वे चाऽद्वयस्याऽपि भावः ॥ यद्यप्येवं नाऽतिरेकावकाशः पूर्णे तत्त्वे तत्त्वमर्थोपपत्तेरिति ॥ वाच्यार्थभेदादेवोभयोस्तत्त्वंपदयोरपर्यायताऽपि इदमपि तैरेवोक्तं । आद्यांशे नाऽणुमात्रोऽपि भेदो यद्यप्येवं भिन्नमादया शब्दौ ॥ वर्तेते त्वय्यद्वयात्मप्रकाशे वाद्यं हातुं जामिता नास्ति तस्मादिति ॥ वाच्यार्थश्चसकलवेदार्थाभिज्ञेन ब्रह्मणा ब्रह्मगीतायां स्फुटो दर्शितः ॥ " त्वमहंशब्दवाच्यार्थः सैव देहादिवस्तुनः ॥ न तच्छब्दार्थतां वक्ति श्रुतिस्तत्वमसीति सा ॥ तदर्थैक्यविरुद्धांशं त्यक्त्वा वाच्यगतं श्रुतिः ॥ अविरुद्धं चिदाकारं लक्षयित्वा ब्रवीति हि ॥ तदर्थे च त्वमर्थैक्यं विरुद्धांशंविनैव च ॥ कारणत्वादिवाक्यार्थं लक्षयित्वा तु केवलं ॥ चिदाकारं पुनस्तस्य त्वमर्थैक्यं ब्रवीति च ॥ तत्वं शब्दार्थभूतस्य चिन्मात्रस्य परात्मनः ॥ एकत्वं यत्स्वतः सिद्धं स हि वाच्यार्थ आस्तिकः " इति ॥ तस्माच्छ्रुत्या युक्त्या बहुज्ञानां वचनाच्च जीवस्य सच्चिदानंदनित्यशुद्धबुद्धमुक्तब्रह्मस्वरूपता सिद्धेति भावः ॥ २६ ॥ ॥

इदानीमुक्तस्वरूपं ब्रह्मात्मत्वेन सम्यक् साक्षात्कुर्वतः पुरुषस्य स्वप्रकाशापरिमितानंदब्रह्मात्मताऽवस्थानलक्षणा विदेहमुक्तिः । प्रारब्धक्षयपर्यंतं देहे-

द्रियादिप्रतिभाससहिता तादृग्ब्रह्मात्मतावस्थानलक्षणा जीवन्मुक्तिश्च फलमित्याभिप्रेत्य प्रकरणमुपसंहरति ॥ उपशांतेति ॥ ॥ ॥ ॥

उपशांतजगज्जीवशिष्याचार्येश्वर
भ्रमं ॥ स्वतःसिद्धमनाद्यंतं परि-
पूर्णमहं महः ॥ २७ ॥ ॥

उपशांतः जीवन्मुक्त्यवस्थायां सम्यग्बोधितः विदेहमुक्तावस्थायां सर्वात्मना निवृत्तः जगज्जीवशिष्याचार्येश्वरलक्षणो भ्रमः यस्मिन् तत्तादृशं मुक्तिद्वयस्य ज्ञानफलत्वं सर्वज्ञात्ममुनिभिरप्युक्तं । जीवन्मुक्तिस्तावदस्ति प्रतीते द्वैतच्छाया तत्र चाऽस्तिप्रतीतेः ॥ द्वैतच्छायारुक्षलक्ष्णास्ति लेशस्तस्मिन्नर्थे स्वानुभूतिः प्रमाणं ॥ तस्माज्जीवन्मुक्तिरूपेण विद्वानारब्धानां कर्मणां भोगसिद्धौ ॥ स्थित्वा भोगं ध्वांतगंधप्रसूतं भुक्त्वाऽत्यंतं याति कैवल्यमंते " इति ॥ स्वतःसिद्धं स्वप्रकाशमनाद्यंतमाद्यंतरहितं परिपूर्णं सर्वात्मकं त्रिविधपरिच्छेदशून्यमित्यर्थः । महस्तेजोऽहमस्मीत्यर्थः २७॥

इदानीमुपनिषदर्थसारसंग्रहात्मके स्वरचिते प्रकरणविदुषांप्रवृत्तिंप्रार्थयते । लक्ष्मीधरेति ।

लक्ष्मीधरकवेः सूक्तिशरदंभोजसंभृतः ॥ अद्वैतमकरंदोऽयं विद्वद्भृंगैर्निपीयताम् ॥ २८॥ ॥

लक्ष्मीधरइतिग्रंथकर्तुर्नाम स चाऽसौ कविः सर्वज्ञः क्रांतदर्शी तस्य सूक्तय एव शरदंभोजानि तेषु संभृतः संपन्न अयं सर्वैरनुभूयमान अद्वैतमकरंदः अद्वैतं ब्रह्मैव रसः " एवमेव रसं साक्षाल्लब्ध्वा देही सनातनं ॥ सुखी भवति सर्वत्र नाऽन्यथा सुरपुंगवा " इतिब्रह्मगीतावचनात् ॥ विद्वद्भृंगैः विद्वांस एव भृंगा ब्रह्मरसज्ञत्वात्तैर्निपीयतां नितरामात्माज्ञाननिवृत्तिपर्यंतं पुनः पुनः सेव्यतां । विचार्याऽप्यपरोक्षेण ब्रह्मात्मानं न वेत्ति चेत् ॥ अपरोक्षावसानत्वाद्भूयोभूयो विचारयेदिति भारतीतीर्थवचनात् । यद्यप्यत्र प्रतिश्लोकं बहुवक्तव्यमस्ति तथापि मंदबुद्धीनामलसानां व्युत्पादनार्थं प्रवृत्तेन मया ग्रंथकाठिन्यगौरवभयादुपरतमिति ॥ २८ ॥

अद्वैतमकरंदस्य रसाभिव्यंजिका कृता ॥ स्वयंप्रकाशयतिना पुरुषोत्तमशासनात् ॥ १ ॥
ब्रह्मानंदरसास्वादामिच्छद्भिर्विबुधोत्तमैः ॥ रसाभिव्यंजिका ह्येषा परिशील्या सदाऽऽदरात् ॥२॥
तापत्रयार्कसंतप्ता मोक्षकामामुदासह ॥ रसाभि-

व्यंजिका गंगां मग्ना भवत सत्तमाः ॥ ३ ॥ व्याख्याप्रणीतच्छलमप्रबुद्धेर्ममाऽपराधं विबुधाः क्षमंताम् ॥ अंबार्धदेहो भगवानतःस्याद्बालापराधात्पितृवत्प्रसन्नः ॥ ४ ॥ श्रीकैवल्यानंदयोगींद्रपादपद्मद्वंद्वे निस्रवन्मोक्षसारे ॥ शुद्धेहंसैः सेविते सुप्रसन्ने मच्चेतोऽच्छां भृंगलीलां विधत्तां ॥ ५ ॥ चिद्बोधे संलग्नचित्तं गुणानां सतामालयं शुद्धसत्त्वप्रमाणम् ॥ नृणां बोधयंतं परब्रह्मतत्त्वं शिवानंदयोगींद्रमीडे सदाऽहं ॥ ६ ॥ सर्वज्ञचूडामणिमीश्वराणामीशानमिंदीवरकोमलांगम् ॥ कारुण्यलावण्यसुधासमुद्रं श्रीजानकीजानिमहं नमामि ॥ ७ ॥ मंदस्मितानंदितभक्तजालं सौंदर्यसंतर्पितवामभागं ॥ स्वानंदसंतृप्तममंदहासं सांबं भजेच्चंद्रकलावतंसं ॥ ८ ॥ इतिश्रीमत्परमहंसपरिव्राजकाचार्यश्रीकैवल्यानंदयोगींद्रपादकमलभृंगायमानश्री स्वयंप्रकाशाख्ययतिविरचिता रसाभिव्यंजिकाख्या श्रीलक्ष्मीधरकविकृताद्वैतमकरंदव्याख्या समाप्ता ॥ ॥

---

समाप्तोयं ग्रन्थः

# वेदान्त पुस्तकानि ।

| | |
|---|---|
| श्रीत्रिपुरारहस्य ज्ञानखंड सटीक. | ....३ |
| श्रीदत्तमाहात्म्य सटीक. .... | ....४ |
| योगवासिष्ठ सटीक.... .... | ....२९ |
| शारीरक शांकरभाष्य. .... | ....१० |
| अद्वैतब्रह्मसुधाकारिका. .... | ....6१२ |
| पंचदशी सटीक. .... .... | ....२6( |
| शिवगीता सटीक. .... .... | ....१ |
| रामगीता मूल. .... .... | ....6१ |
| विवेकचूडामणि. .... .... | ....6४ |
| शंकरदिग्विजय सटीक. .... | ....४ |
| अपरोक्षानुभूति सटीक. .... | ....6( |
| गीताशंकरानंदी सटीक. .... | ....९ |
| गीता श्रीधरीटीकासह. .... | ....१ |
| गीताशांकरभाष्यानंदगिरी टीका.... | ....६ |
| उपदेशसाहस्री सटीक. .... | ....३ |
| वेदान्तशतश्लोकी. .... .... | ....१ |
| वेदान्तसार सटीक. .... .... | ....१6( |
| प्रबोधचंद्रोदय नाटक.... .... | ....१6( |
| पातंजलि योगदर्शन. .... | ....१6( |
| हठयोगप्रदीपिका हिंदुस्थानी भाषा. | ....२ |
| हठयोगप्रदीपिका सटीक इंग्रजीभाषा टीकासमेता | १6( |

**आबाजी रामचंद्र सावंत**

**'श्रीरामतत्व प्रकाश' मुद्रणालयाधिपति: बेळगांव.**